एवं द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेयः, उपदर्शितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् । अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधु सङ्गच्छते इत्यपि केचिदिति कृतं पल्लवितेन ।

इत्यवच्छेदकत्वनिरुक्तिदीधितिः ।

---

द्रव्यत्वत्वेति । द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्वत्वापेक्षया द्रव्यत्वत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य गुरुतया तदवच्छिन्नाऽभावाप्रसिद्धेरिति भावः । ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नाभाववद्सम्बद्धत्वविशिष्टसामान्यकभिन्नं स्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकीभूततादृशधर्माभिन्नं वा यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावीयतादृशप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति साधने तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वा दुर्ज्ञेयत्वाभावात्तथैव व्याप्तिर्वाच्येत्यत आह उपदर्शितेति । स्वत्वादीति । आदिना व्यापकतापर्यवसन्नस्य तत्तदवच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः । अतएव—गुरोरवच्छेदकत्वादेव । सङ्गच्छत इति । अन्यथा ग्राह्यगन्धत्वापेक्षया गुरुत्वेन घ्राणग्राह्यगुणत्वावच्छिन्नाभावाऽप्रसिद्ध्या तद्वृत्तित्वरूपं व्यभिचरितत्वं तत्र न स्यादिति भावः । यद्यपि साध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभाववद्वृत्तित्वमेव व्यभिचारः, स च ग्राह्यगन्धत्वावच्छिन्नाभाववद्वृत्तित्वेनैव तत्र सुलभ इत्यपि शक्यते वक्तुम्, तथापि तद्बुद्धेः प्रकृतसाध्यकानुमित्यविरोधितया हेत्वाभासता न स्यात् । यद्विषयकत्वेन यादृशानुमानविरोधित्वं तस्यैव तत्र तथात्वादिति भावः ॥

इति श्री जगदीशभट्टाचार्य्यविरचितमवच्छेदकत्वनिरुक्तिप्रकरणं सम्पूर्णम् ।

---

नामनुपपत्तिमप्याह दीधितौ एवमिति । रीत्येति शेषः । अव्याप्यत्वप्रसङ्गोऽप्यनुसन्धेय इति । अतो गुरोरवच्छेदकत्वमावश्यकमेवेति शेषः ।

इति श्रीमहामहोपाध्याय श्रीप्रभुदत्तशास्त्रिसुत श्रीशिवदत्तमिश्रविरचिता जागदीश्यवच्छेदकत्वनिरुक्तिप्रकरणव्याख्या समाप्ता ।

---

१ मुक्तावली । न्यायव्याकरणाचार्य पं० श्रीसूर्यनारायणशुक्लरचित मयूख टीका सहित । आज तक मुक्तावली पर जितनी टीका टिप्पणी छपी हैं उन सबसे उत्तम यह नवीन ढङ्गकी सरलटीका विद्यार्थियोंके अत्यन्त उपयोग की हुई है ।

संपूर्ण ग्रन्थ का मूल्य १)

प्रत्यक्षखण्डान्तः प्रथमोभागः ॥=) अनुमानशब्दखण्डाद्यात्मक द्वितीयोभागः ॥=)

२ माथुरीपञ्चलक्षणी सिंहव्याघ्रलक्षण सहिता । बनारस गवर्नमेंट संस्कृत कालेज के अध्यापक न्यायाचार्य पं० श्रीशिवदत्तमिश्रकृत गंगानिर्झरिणी व्याख्या टिप्पणी सहित । इस टीका टिप्पणी के लिए अधिक न लिखकर इतना लिखना पर्याप्त होगा कि विद्यार्थियों के उपयोगी ऐसी सरल तथा विस्तृत टीका आज तक कहीं भी प्रकाशित नहीं हुई है । मूल्य लागत मात्र ।॥)

३ माथुरीपञ्चलक्षणी सिंहव्याघ्रलक्षण सहित । पं० श्री उमानाथाज्र्यालकृत व्याख्या टिप्पणी सहित । बनारस हिन्दु युनिवर्सिटी के अध्यापक श्री हरिहरशास्त्री सङ्कलित माथुरी पञ्चलक्षणी क्रोड़पत्र सहित । इस टीकामें विशेषता यह है कि इसमें सभी आवश्यक विषयों पर संक्षिप्त में व्याख्या हुई है । मूल्य लागत मात्र ।=)

४ जागदीशीपञ्चलक्षणी सिंहव्याघ्रलक्षणसहिता । बनारस गवर्नमेंट संस्कृत कालेजके अध्यापक न्यायाचार्य पं० श्री शिवदत्तमिश्रकृत गंगानिर्झरिणी व्याख्या टिप्पणी सहित इसकी टीका भी माथुरीपञ्चलक्षणी गंगानिर्झरिणी व्याख्याके सदृश परीक्षोपयोगि सरल तथा विस्तृत हुई है । ऐसी उत्तम टीका का मूल्य लागत मात्र ॥)

५ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रीकृत टिप्पणी सहित । मूल्य ॥।)

६ सांख्यतत्त्वकौमुदी । परीक्षोपयोगी वंशीधरी टीकासहित । विद्यार्थियों के लाभ के लिए मूल्य पूर्व से घटाकर अत्यन्त अल्प रखा है । मूल्य लागतमात्र २॥)

७ योगसूत्रम् । मणिप्रभा, भोजवृत्तिः, योगचन्द्रिका, भावागणेशवृत्तिः, नागोजी भट्टवृत्तिः, योगसुधाकर आदि ६ टीका तथा टिप्पणी सहित । ऐसी उत्तम छः टीका सहित योगसूत्र की दूसरी पुस्तक आज तक नहीं छपी थी । यही छः टीका अलग २ खरीदने से ५) ६) को मिलती थी मगर अब यह छः टीका एकत्र वाली पुस्तक का मूल्य अत्यन्त अल्प रखा गया है । मूल्य लागत मात्र २)

८ योगदर्शनम् । श्रीमद्वाचस्पतिमिश्रविरचित तत्त्ववैशारद्याऽऽख्याव्याख्याभूषित-महर्षिकृष्णद्वैपायनप्रणीतभाष्यालङ्कृतम् । पूज्यपादस्वामि श्री १०८ बालरामोदासीनविरचित विषमस्थलटिप्पणी सनाथीकृतम् । मूल्य ५)

९ अर्थसंग्रहः । परीक्षोपयोगि संस्कृतटीकाटिप्पणी सहितः। मूल्यलागत मात्र ॥=)

८१ गणितकौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । [ गणितविभागे १ ] रु० ०—६

८२ छन्दःकौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम् । [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम् । महर्षिप्रवरपतञ्जलिप्रणीतम् । तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम् । सटिप्पण । [ योग० विभागे १ ] रु० २—०

८४-[१] रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा पं० ब्रह्मशङ्करमिश्रकृतपरीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः । १ से ४ सर्गः । मूल्यम् रु० १-४-० तथा १ से ५ सर्गः । रु० १—८

८४-[२] रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथ कृत सञ्जीविनीटीका पं० श्रीसुदामामिश्रकृत परीक्षोपयोगि सुधाऽऽख्य व्याख्यया सहितः । ६ से १० सर्ग । ( काव्य वि० १२ ) रु० १—८

८५ योगदर्शनम् । पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम् । सटिप्पण । [ योग वि० २ ] १—०

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो भागः । [ काव्यविभागे १३ ] रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्येति पदवी विभूषितेन पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायणशास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणानिर्मितया चक्रधराख्य टिप्पण्या च संवलिता उत्तरार्द्ध । ( व्या० वि० ११ ) रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् । (पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

---

सर्वविधपुस्तकप्राप्तिस्थानम्
जयकृष्णदास हरिदास गुप्तः—
**चौखम्बा संस्कृत सीरिज़ आफिस,**
बनारस सिटी ।